**तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां**
**न त्वं दृष्ट्वा पुनरलकां ज्ञास्यसे कामचारिन् ।**
**या वः काले वहति सलिलोद्गारमुच्चैर्विमाना[१]**
**मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम् ॥६६॥**

**अन्वयः**—कामचारिन् ! प्रणयिनः इव तस्य उत्सङ्गे स्रस्तगङ्गादुकूलाम् अलकां दृष्ट्वा त्वं पुनः न ज्ञास्यसे इति न । उच्चैर्विमाना या वः काले सलिलोद्गारम् अभ्रवृंदं कामिनी मुक्ताजालग्रथितम् अलकम् इव वहति ॥६६॥

**शब्दार्थ**—**कामचारिन्**=इच्छानुसार विचरण करने वाले, **प्रणयिन् इव**=प्रेमी के समान, **उत्सङ्गे**=गोद में, **स्रस्तगङ्गादुकूलाम्**=खिसके हुए गङ्गा के समान श्वेत दुपट्टे वाली, **न ज्ञास्यसे (इति) न**=नहीं जान सकोगे (ऐसा) नहीं (है), **उच्चैर्विमाना**=ऊँचे सात मञ्जिल भवनों वाली, **वः काले**=तुम्हारे समय में (वर्षा काल में), **सलिलोद्गारम्**=जल बरसाने वाले, **अभ्रवृन्दम्**=मेघ समूह को, **कामिनी**=स्त्री, **मुक्ताजालग्रथितम्**=मोतियों के गुच्छों से गूँथे हुए, **अलकम्**=केशों को, **वहति**=धारण करती है ।

**अनुवाद**—**हे इच्छानुसार विचरण करने वाले (मेघ) ! प्रेमी के समान उस (कैलाश पर्वत) की गोद में खिसके हुए गङ्गा के समान श्वेत दुपट्टे वाली, अलका (पुरी) को देखकर तुम न जान सकोगे (ऐसा) नहीं (है); ऊँचे सात मञ्जिल भवनों वाली जो (अलकापुरी) तुम्हारे समय (वर्षा काल) में जल बरसाने वाले मेघ समूह को, (वैसे ही धारण करती है) जैसे स्त्री मोतियों के गुच्छे से गूँथे हुए केशों को धारण करती है ॥६६॥**

**संस्कृत-टीका**—हे स्वेच्छाविचरणशील ! प्रियतमस्य यथा कैलासस्य ऊर्ध्वभागे स्रस्त-गङ्गाशुभ्रवस्त्रमिव अलकानगरीम् अवलोक्य त्वं पुनः न ज्ञास्यसे इति न अर्थात् अवश्यमेव ज्ञास्यसे । उन्नतसप्तभूमिकाभवना या अलका वर्षाकाले जलवर्षकं मेघसमूहं स्त्री मौक्तिकसरगुम्फतं चूर्णकुन्तलानि इव विभर्ति ।

**सञ्जीवनी**—तस्येति । प्रणयिनः प्रियतमस्येव तस्य कैलासस्योत्सङ्गे ऊर्ध्वभागे कटौ च । 'उत्सङ्गो मुक्तसंयोगे सक्थिन्यूर्ध्वतलेऽपि च' इति मालतीमालायाम् । गङ्गादुकूलं शुभ्रवस्त्रमिवः। (इत्युपमितमासः ।) 'दुकूलं सूक्ष्मवस्त्रे स्यादुत्तरीये सितांशुके' इति शब्दार्णवः । अन्यत्र तु गङ्गैव दुकूलम् । तत्स्रस्तं यस्यास्तां तथोक्तामलकां कुबेरनगरीं दृष्ट्वा । कामिनीमिवेति शेषः । हे कामचारिन् ! त्वं पुनस्त्वं तु न ज्ञास्यसे इति न । किं तु ज्ञास्यसे एवेत्यर्थः । कामचारिणस्ते पूर्वमपि बहुकृत्वो दर्शनसंभवादज्ञानमसंभावितमेवेति निश्चयार्थं नञ्द्वयप्रयोगः । (तदुक्तम्—'स्मृति-निश्चयसिद्धार्थेषु नञ्द्वयप्रयोगः' इति ।) उच्चैरुन्नतानि विमानानि सप्तभूमिकाभवनानि । 'विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनि' इति यादवः । तस्यां सां मेघसंवाहनस्थानसूचनार्थमिदं विशेषणम्। अन्यत्र विमाना निष्कोपा । याऽलका वो युष्माकं काले । मेघकाल इत्यर्थः । (कालस्य सर्वमेघसाधारण्याद्वा इति बहुवचनम् ।) सलिलमुद्गिरतीति सलिलोद्गारम् । स्रवत्सलिलधारमित्यर्थः । अभ्रवृन्दं मेघकदम्बकं कामिनी स्त्री मुक्ताजालैर्मौक्तिकसरैर्ग्रथितं प्रत्युप्तम् । 'पुंश्चल्यां मौक्तिके मुक्ता' इति यादवः । अलकमिव चूर्ण कुन्तलानीव । (जातावेकवचनम् ।) 'अलकाश्चूर्णकुन्तलाः' इत्यमरः । वहति बिभर्ति । अत्र कैलासस्यानुकूलनायकत्वमलकायाश्च स्वाधीनपतिकाख्यनायिकात्वं ध्वन्यते । ('एका-यत्तोऽनुकूलः स्यात्' इति, 'प्रियोपलालिता नित्यं सवाधीनपतिका मता' इति च लक्ष्यन्ति । उदाहरन्ति च—'लालयन्नलकप्रान्तान्रचयन्पत्रमञ्जरीन् । एकां विनोदयन् कान्तां छायावदनुवर्तते ।' इति) ॥६६॥

---

१. उच्चैर्विमानः ।

**व्याकरण**—**उत्सङ्गे**—उद्+√सञ्ज्+घञ् । **प्रणयिन्**—प्रणय+इनि । **स्रस्तगङ्गादुकूलाम्**—गङ्गादुकूलम् इव (उपमित त०), **कामिनीपक्षे**—गङ्गा इव दुकूलम् (उपमित त०) स्रस्तं गङ्गादुकूलं यस्याः सा (बहु०) ताम्, **स्रस्त**—√स्रस्+क्त । **दृष्ट्वा**—दृश्+क्त्वा । **ज्ञास्यसे**—√ज्ञा, लृट् म० पु० एकव० । **कामचारिन्**—कामेन चरति इति कामचारी (उपपद त०), काम+√चर्+णिनि, सम्बोधन, प्र० एकव० । **वहति**—√वह्+लट् ल० प्र० पु० एकव०। **सलिलोद्गारम्**—सलिलम् उद्गिरति इति तम् (कृदन्त उपपद त०), **उद्गार**—उत्+√गॄ+अण् । **उच्चैर्विमाना**—उच्चैः विमाना सस्याः सा (बहु०), **कामिनीपक्षे**—विगतः मानः यस्याः सा (बहु०), उच्चैः विमानाः (गति त०) । **मुक्ताजालग्रथितम्**—मुक्तानां जालानि (ष० त०) तैः ग्रथितम् (तृ० त०) तत्, **ग्रथित**—√ग्रन्थ्+क्त । **अभ्रवृन्दम्**—अभ्राणां वृन्दम् (ष० त०) तत् ।

प्रस्तुत श्लोक में **उपमा** और **श्लेष** अलङ्कार हैं, जिनका लक्षण (पूर्वमेघ/१५) तथा (पूर्वमेघ/२९) में किया गया है । □



महाकविकालिदासप्रणीतम्

# मेघदूतम्

## उत्तरमेघः

**प्रसङ्ग**—पूर्व मेघ में यक्ष ने मेघ को अलकापुरी जाने का मार्ग बताया है तथा अब अलकापुरी का वर्णन करता हुआ यक्ष कहता है कि—

**विद्युद्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः**
**सङ्गीताय प्रहतमुरजाः[1] स्निग्धगम्भीरघोषम्[2] ।**
**अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः**
**प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ।।१।।**

**अन्वयः**—यत्र ललितवनिताः सचित्राः संगीताय प्रहतमुरजाः मणिमयभुवः अभ्रंलिहाग्राः प्रासादाः विद्युद्वन्तं सेन्द्रचापं स्निग्धगम्भीरघोषम् अन्तस्तोयं तुङ्गं त्वां तैः तैः विशेषैः तुलयितुम् अलम् (सन्ति) ।।१।।

**शब्दार्थ**—**यत्र**=जहाँ (अलकापुरी में), **ललितवनिताः**=सुन्दर स्त्रियों वाले, **सचित्राः**=चित्रों से युक्त, **संगीताय**=संगीत के लिए, **प्रहतमुरजाः**=मृदङ्ग बजाये गये, **मणिमयभुवः**=मणिजटित फर्शों वाले, **अभ्रंलिहाग्राः**=गगनचुम्बी शिखरों वाले, **प्रासादाः**=भवन, **विद्युद्वन्तम्**=बिजली धारण करने वाले, **सेन्द्रचापम्**=इन्द्रधनुष से युक्त, **स्निग्धगम्भीरघोषम्**=मधुर व गम्भीर गर्जन वाले, **अन्तस्तोयम्**= अन्दर जल (धारण करने) वाले, **तुङ्गम्**=ऊँचे, **त्वाम्**=तुमसे, **तैः तैः विशेषैः**=उन-उन गुणों के कारण, **तुलयितुम्**=बराबरी करने में, **अलम्**=समर्थ, (सन्ति=है)।

**अनुवाद**—जहाँ (अलकापुरी) में सुन्दर स्त्रियों वाले, चित्रों से युक्त, सङ्गीत के लिए मृदङ्ग बजाये गये, मणिजटित फर्शों वाले, गगनचुम्बी शिखरों वाले भवन बिजली धारण करने वाले, इन्द्रधनुष से युक्त, मधुर व गम्भीर गर्जन वाले, (अपने) अन्दर जल (धारण करने) वाले (और) ऊँचे तुमसे उन-उन गुणों के कारण बराबरी करने में समर्थ (हैं) ।।१।।

**संस्कृत-टीका**—**यत्र**—अलकापुर्यां रम्यस्त्रीकाः चित्रसमन्वितास्तौर्यत्रिकाय ताडितमृदङ्गाः रत्नमयभूमयः गगनचुम्बिशिखराः देवगृहाणि तडिद्वन्तम् इन्द्रधनुर्युक्तम् मधुरगम्भीरगर्जनम् अन्तर्जलम् उन्नतं मेघम् पूर्वोक्तैः ललितवनित्वादिभिः विशेषैः धर्मैः समीकर्तुं पर्याप्ताः ।

**सञ्जीवनी**—विद्युत्वन्तमिति । यत्रालकायां ललिता रम्या वनिताः स्त्रियो येषु । सह चित्रैर्वर्तन्त इति सचित्राः । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । ('तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । 'वोपसर्जनस्य' इति सहशब्दस्य समासः ।) सङ्गीताय तौर्यत्रिकाय प्रहतमुरजास्ताडितमृदङ्गाः। 'मुरजा

---

१. संगीतार्थं प्रहतमुरजाः ।
२. पर्जन्यघोषम् ।

तु मृदङ्गेस्याद्ढक्कामुरजयोरपि' इति शब्दार्णवः । मणिमय्यो मणिविकारा भुवो येषु ते । अभ्रंलिहन्तीत्यभ्रंलिहान्यभ्रङ्कषाणि । ('वहाभ्रेलिहः' इति खशप्रत्ययः । 'अरुर्द्विषदित्यादिना' मुमागमः ।) अग्राणि शिखराणि येषां ते तथोक्ताः । अतितुङ्गा इत्यर्थः । प्रासादा देवगृहाणि । 'प्रासादो देवभूभुजाम्' इत्यमरः । विद्युतोऽस्य सन्तीति विद्युद्वन्तम् । सेन्द्रचापमिन्द्रचापवन्तम् स्निग्धः श्राव्यो गम्भीरो घोषो गर्जितं यस्य तम् । अन्तरन्तर्गतं तोयं यस्य तम् । तुङ्गमुन्नतं त्वां तैस्तैविशेषैर्ललितवनितत्वादिधर्मैस्तुलयितुं समीकर्तुमलं पर्याप्ताः । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । (अत्रोपमानोपमेयभूतमेघप्रासादाधर्माणां विद्युद्वनितादीनां यथासंख्यमन्योन्यसादृश्यान्मेघप्रासादसादृश्यसिद्धिरिति बिम्बप्रतिबिम्बभावनेयं पूर्णोपमा । वस्तुतो भिन्नयोः परस्परसादृश्यादभिन्नयोरुपमानोपमेयधर्मयोः पृथगुपादानाद्बिम्बप्रतिबिम्बभावः) ॥१॥

**टिप्पणी—ललितवानिताः**—यहाँ अलकापुरी में रहने वाली सुन्दर कान्ति वाली स्त्रियों की विद्युत् से समानता प्रकट की गयी है ।

**सचित्राः**—महलों की दीवार पर अनेक प्रकार के रङ्गों के चित्र टँगे होते हैं, इसलिए वह सतरंगी इन्द्र धनुष से युक्त मेघ की समानता कर सकते हैं ।

**व्याकरण—विद्युद्वन्तम्**—विद्युतः सन्ति अस्य इति विद्युत्वान्, विद्युत्+मतुप्, तम्, **विद्युत्**—वि+√द्युत्+क्विप् । **ललितवनिताः**—ललिताः वनिताः येषु ते (बहु०) । **सेन्द्रचापम्**—इन्द्रस्य चापः (ष० त०) तेन सहितः (बहु०) तम् । **सचित्राः**—चित्रेण सहिताः (बहु०) । **सङ्गीताय**—सम्+√गै+क्त, च० एकव० । **प्रहतमुरजाः**—प्रहताः मुरजाः येषु ते (बहु०), **प्रहत**—प्र+√हन्+क्त। **स्निग्धगम्भीरघोषम्**—स्निग्धः गम्भीरः घोषः यस्य सः (बहु०) तम् । **अन्तस्तोयम्**—अन्तर्गतं तोयं यस्य सः (बहु०) तम् । **मणिमयभुवः**—मणिमयाः भुवः येषु ते (बहु०), **मणिमय**—मणि+मयट्। **अभ्रंलिहाग्राः**—अभ्रं लिहन्ति इति ते (उप० त०), अभ्रंलिहानि अग्राणि येषां ते (बहु०), **अभ्रंलिह**—अभ्र+√लिह्+खश् । **तुलयितुम्**—√तुल्+णिच्+तुमुन् ।

प्रस्तुत श्लोक में **उपमालङ्कार** है । □

**प्रसङ्ग**—यक्ष मेघ से अलकापुरी की स्त्रियों के पुष्पालङ्कार का वर्णन करता हुआ कहता है—

**हस्ते लीलाकमलमलके बालकुन्दानुविद्धं[1]**
**नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः[2] ।**
**चूडापाशे नवकुरबकं चारु कर्णे शिरीषं**
**सीमन्ते[3] च त्वदुपगमजं यत्र नीपं वधूनाम् ॥२॥**

**अन्वयः**—यत्र वधूनां हस्ते लीलाकमलम् अलके बालकुन्दानुविद्धम् आनने लोध्र प्रसवरजसा पाण्डुतां नीता श्रीः चूडापाशे नवकुरबकम् कर्णे चारु शिरीषम् सीमन्ते च त्वदुपगमजं नीपम् (अस्ति) ॥२॥

**शब्दार्थ—वधूनाम्**=स्त्रियों के, **लीलाकमलम्**=क्रीड़ा के लिए धारण किया हुआ कमल पुष्प, **अलके**=बालों में, **बालकुन्दानुविद्धम्**=नये कुन्द पुष्पों का गुम्फन, **लोध्रप्रसवरजसा**=लोध्र

१. बालकुन्दानुवेधो ।
२. आननश्रीः ।
३. सीमन्तेऽपि ।

पुष्पों की धूलि से, **पाण्डुताम्**=धवलता को, **नीता**=प्राप्त, **श्री:**=शोभा, **चूडापाशे**=जूड़े में, **नवकुरबकम्**=नवीन कुरबक के पुष्प, **चारु**=सुन्दर, **शिरीषम्**=शिरीष पुष्प, **सीमन्ते**=माँग में, **त्वदुपगमजम्**=तुम्हारे आने से उत्पन्न होने वाला, **नीपम्**=कदम्ब पुष्प ।

**अनुवाद—जहाँ (अलकापुरी में) स्त्रियों के हाथ में क्रीड़ा के कमल, बालों में नये कुन्द पुष्पों का गुम्फन, मुख में लोध्र के पुष्पों की धूलि से धवलता को प्राप्त शोभा, जूड़े में नवीन कुरबक के पुष्प, कानों में सुन्दर शिरीष पुष्प और माँग में तुम्हारे आने से उत्पन्न होने वाला कदम्ब पुष्प (रहता है) ।।२।।**

**संस्कृत-टीका**—यत्र अलकापुर्याम् स्त्रीणाम् करे क्रीडाकमलम् कुन्तले नवमाध्यपुष्पगुम्फनम् मुखे लोध्रपुष्पपरागेण पाण्डुरतां प्रापिता शोभा केशपाशे नवकुरबकपुष्पं (वासन्त: पुष्पविशेष:) श्रोत्रयो: सुन्दरं शिरीषपुष्पं केशसीम्नि च त्वदाविर्भावजनितं कदम्बपुष्पं वर्तते ।

**सञ्जीवनी**—संप्रति सर्वदा सर्वर्तुसंपत्तिमाह—हस्त इति । यत्रालकायां वधूनां स्त्रीणां हस्ते लीलार्थं कमलं लीलाकमलम् । शरल्लिङ्गमेतत् । (तदुक्तम् 'शरत् पङ्कजलक्षणा' इति ।) अलके कुन्तले । जातावेकवचनम् । अलकेष्वित्यर्थ: । बालकुन्दै: प्रत्यग्रमाध्यकुसुमैरनुविद्धम् । अनुवेधो ग्रथनम् । (नपुंसके भावे क्त:) । यद्यपि कुन्दानां शैशिरत्वमस्ति 'माध्यं कुन्दम्' इत्यभिधानात्तथापि हेमन्ते प्रादुर्भाव: शिशिरे प्रौढत्वमिति व्यवस्थाभेदेन हेमन्तकार्यत्वमित्याशयेन बालेति विशेषणम् । ('अलकम्' इति प्रथमान्तपाठे सप्तमीप्रक्रमभङ्ग: स्यात् । नाथस्तु नियतपुंल्लिङ्गताहानिश्चेति दोषान्तरमाह। तदसत् । 'स्वभाववक्राण्यलकानि तासाम्, 'निर्धूतान्यलकानि पाटितमुर: कृत्स्नोऽधर: खण्डित:' इत्यादिषु प्रयोगेषु नपुंसकलिङ्गतादर्शनादिति ।) आनने मुखे लोध्रप्रसवानां लोध्रपुष्पाणां शैशिराणां रजसा परागेण । 'स्यादुत्पादे फले पुष्पे प्रसवी गर्भमोचने' इत्यमर: । पाण्डुतां नीता श्री शोभा । चूडापाशे केशपाशे नवकुरबकं वासन्त: पुष्पविशेष: । कर्णे चारु पेशलं शिरीषं ग्रैष्म: पुष्पविशेष:। सीमन्ते मस्तककेशवीथ्याम् । 'सीमन्तमस्त्रियां मस्तककेशवीथ्यामुदाहृतम्' इति शब्दार्णव: । तवोपगमो मेघागम इत्यर्थ:, तत्र जातं त्वदुपगमजम् । वार्षिकमित्यर्थ: । नीपं कदम्बकुसुमम् सर्वत्रास्तीति शेष:। अस्तिर्भवतिपर: प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति न्यायात् । इत्थं कमलकुन्दादितत्तत्कार्यसमाहारभिधानादर्थात्सर्वर्तुसमाहारसिद्धि: । कारणं विना कार्यस्यासिद्धेरिति भाव: ।।२।।

**टिप्पणी—लीलाकमलम्**—कमल का पुष्प जब क्रीड़ा के लिए हाथ में लिया जाता है तब उसे लीलाकमल कहते हैं । कालिदास ने कुमारसम्भव और रघुवंश में भी उसका उल्लेख किया है । कमल ग्रीष्म और शरद् में खिलता है । कुन्द हेमन्त ऋतु में, लोध्र शिशिर में, कुरबक वसन्त में, शिरीष ग्रीष्म में खिलता है तथा कदम्ब वर्षा ऋतु के आने के साथ विकसित होता है । इस प्रकार वर्णन करके महाकवि ने यह दिखाया है कि अलकापुरी में छ: ऋतुओं की शोभा सदा रहती है ।

**लोध्र प्रसवरजसा**—लोध्र पुष्प की धूलि से—यह मुख पर लगाने के लिये पाउडर की तरह प्रयुक्त होता है । इससे स्पष्ट है कि प्राचीन काल में भी स्त्रियाँ मुख पर पाउडर का प्रयोग करती थीं ।

**व्याकरण—लीलाकमलम्**—लीलार्थम् कमलम् (मध्यपद लोपी त०) । **बालकुन्दानुविद्धम्**— बालानि च तानि कुन्दानि (कर्मधा०) तै: अनुविद्धम् (तृ० त०), **अनुविद्ध**—अनु+√व्यध्+क्त। **नीता**—√नी+क्त+टाप् । **लोध्रप्रसवरजसा**—लोध्रस्य प्रसवा: (ष० त०), तेषां रजसा (ष० त०। **पाण्डुताम्**—पाण्डु+तल्+टाप् । **चूडापाशे**—चूडानां पाशे (ष० त०) । **नवकुरबकम्**—नवं च तत् कुरबकम् (कर्मधारय) । **सीमन्ते**—सीम्न: अन्त: (ष० त०) तस्मिन् । **त्वदुपगमजम्**—तव

उपगम: (ष० त०) तस्मात् जात: (उप० त०), **उपगम्**—उप+√गम्+अप्, **उपगमजम्**—उप-गम्+√जन्+ड ।

**प्रसङ्ग**—अलकापुरी के प्राकृतिक सौन्दर्य का वर्णन करता हुआ यक्ष मेघ से कहता है कि—

**यत्रोन्मत्तभ्रमरमुखरा:[१] पादपा नित्यपुष्पा:**
**हंसश्रेणीरचितरशना नित्यपद्मा: नलिन्य: ।**
**केकोत्कण्ठा: भवनशिखिनो नित्यभास्वत्कलापा:**
**नित्यज्योत्स्ना:[२] प्रतिहततमोवृत्तिरम्या: प्रदोषा: ॥३॥**

**अन्वय:**—यत्र पादपा: नित्यपुष्पा: उन्मत्तभ्रमरमुखरा: नलिन्य: नित्यपद्मा: हंसश्रेणीरचितरशना: भवनशिखिन: नित्यभास्वत्कलापा: केकोत्कण्ठा: प्रदोषा: नित्यज्योत्स्ना: प्रतिहततमोवृत्तिरम्या: ॥३॥

**शब्दार्थ**—**यत्र**=जहाँ (अलकापुरी में), **पादपा:**=वृक्ष, **नित्यपुष्पा:**=सदा पुष्पों से युक्त, **उन्मत्तभ्रमरमुखरा:**=मतवाले भ्रमरों से गुञ्जायमान, **नलिन्य:**=कमलनियाँ, **नित्यपद्मा:**=सदा कमलों से युक्त, **हंसश्रेणीरचितरशना:**=हंसों की पङ्क्तियों से बनी करधनियों वाली, **भवनशिखिन:**=भवनों के (पालतू) मोर, **नित्यभास्वत्कलापा:**=नित्य चमकने वाले पंखों वाले, **केकोत्कण्ठा:**=बोलने के लिए गर्दन उठाये हुए, **प्रदोषा:**=रात्रियाँ, **नित्यज्योत्स्ना:**=नित्य चाँदनी से युक्त, **प्रतिहततमोवृत्तिरम्या:**=नष्ट हुए अन्धकार के प्रसार वाली और सुन्दर ।

**अनुवाद—जहाँ (अलकापुरी में) वृक्ष सदा पुष्पों से युक्त (एवं) मतवाले भ्रमरों से गुञ्जायमान (हैं), कमलनियाँ सदा कमलों से युक्त (तथा) हंसों की पंक्तियों से बनी करधनियों वाली (हैं), भवनों के (पालतू) मोर चमकने वाले पंखों वाले (और) बोलने के लिए गरदन उठाये हुए और रात्रियाँ नित्य चाँदनी से युक्त (अत:) नष्ट हुए अन्धकार के प्रसार वाली और सुन्दर हैं ॥३॥**

**संस्कृत-टीका**—यस्याम् अलकायां वृक्षा: अनवरतपुष्पा: अत एव उन्मत्तमधुकरै: शब्दायमाना: पद्मिन्य: नित्यकमला अत एव हसपङ्क्तिविहितमेखला:, नित्यं हंसपरिवेष्टिता इति भाव: । गृहमयूरा: सततोज्ज्वलवर्हा: न तु वर्षास्वेवेति भाव: अतएव केकोद्ग्रीवा: रात्रय: नित्यचन्द्रिकोज्ज्वला निवारिताऽन्धकारप्रसरा: रमणीयाश्च सन्ति ।

**सञ्जीवनी**—यत्रेति । यत्रालकायां पादपा वृक्षा: नित्यानि पुष्पाणि येषां ते तथा । न त्वृतुनियमादिति भाव: । अत एवोन्मत्तैर्भ्रमरैर्मुखरा: शब्दायमाना: । नलिन्य: पद्मिन्यो नित्यानि पद्मानि यासां तास्तथा न तु हेमन्तवर्जितमित्यर्थ: । अत एव हंसश्रेणीरचितरशना: । नित्यं हंसपरिवेष्टिता इत्यर्थ: । भवनशिखिन: क्रीडामयूरा: नित्यं भास्वन्त: कलापा बर्हाणि येषां ते तथोक्ता: । न तु वर्षास्वेव । अत एव केकाभिरुत्कण्ठा उद्ग्रीवा: । प्रदोषा रात्रयो नित्या ज्योत्स्ना येषां ते । न तु शुक्लपक्ष एव । अत एव प्रतिहता तमसां वृत्तिर्व्याप्तिर्येषां ते च ते रम्याश्चेति तथोक्त: ॥३॥

**टिप्पणी**—**उन्मत्तभ्रमरमुखरा:**—अलकापुरी में वृक्षों पर सभी ऋतुओं में सदा पुष्प विकसित रहते हैं, इसीलिए भ्रमर भी नित्य उन पर गुञ्जारते रहते हैं । इसी प्रकार का भाव कालिदास ने रघु० ९/२९ में व्यक्त किया है ।

---

१. यस्यां मत्तभ्रमरनिकरा: ।
२. नित्यज्योत्स्नाप्रतिहत... ।

**पादपा नित्यपुष्पाः**—यद्यपि वृक्षों पर समय-समय पर पुष्प विकसित होते हैं परन्तु वहाँ अलकापुरी में वृक्ष सदा पुष्पों से युक्त रहते हैं ।

**हंसश्रेणीरचितरशना**—हंस कमलनाल खाते हैं, अलकापुरी में कमलनियों पर सदा कमल विकसित होते रहते हैं, इसलिये वहाँ कमलनियाँ सदा हंसों से घिरी रहती हैं । इसी प्रकार के भाव देखिये—पूर्वमेघ २८, ऋतु ३/२४, विक्र० ४/२४ ।

**नित्यभास्वत्कलापाः**—वहाँ अलकापुरी में घर-घर में पालतू मोर हैं और मोर वर्षा की काली-काली घटा देखकर कूकते हैं तथा वर्षा ऋतु में ही इनके पंखों में चमक आती है, किन्तु अलकापुरी में सदा मोर कूकते रहते हैं और उनके पंखों में चमक रहती है ।

**नित्यज्योत्स्नाः**—क्योंकि सिर पर चन्द्रमा की कला को धारण किये हुए शिव सदा अलकापुरी के उद्यान में रहते हैं, इस कारण वहाँ की रात्रियाँ सदा चाँदनी से युक्त होती हैं । कवि ने स्वयं पूर्वमेघ में कहा है—

*गन्तव्या ते वसतिरलका नामयक्षेश्वराणां ।*

*बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥७॥*

**प्रतिहततमोवृत्तिरम्याः**—इससे ज्ञात होता है कि अलकापुरी में रात्रियाँ सदा प्रकाश से युक्त रहती हैं ; इसलिए वहाँ कभी भी कृष्ण पक्ष नहीं होता, सदा शुक्लपक्ष ही रहता है ।

**व्याकरण—उन्मत्तभ्रमरमुखराः**—उन्मत्ताः भ्रमराः (कर्मधा०) तैः मुखरा (तृ० त०) उद्+√मद्+क्तः=उनमत्ता, मुख+रः=मुखराः (रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् इति र प्रत्ययः ।) **पादपाः**—पादैः पिबन्तीति, पाद+√पा+क । **नित्यपुष्पाः**=नित्यानि पुष्पाणि येषां ते (बहु०) । **हंसश्रेणीरचितरशनाः**—हंसानां श्रेण्यः (ष० त०), ताभिः रचिताः रशना यासां ताः (बहुव्रीहि) । **नित्यपद्माः**—नित्यानि पद्मानि यासां ताः (बहु) । **नलिन्यः**—नल+इनि+ङीप् । **केकोत्कण्ठाः**—उद्गताः कण्ठाः येषां ते उत्कण्ठाः (बहु०) केकाभिः उत्कण्ठाः (तृ० त०) । **भवनशिखिनः**—भवनानां भवनेषु वा शिखिनः (ष, या स० त०), **शिखिन्**—शिखा+इनिः । **नित्यभास्वत्कलापाः**—नित्यं भास्वन्तः (केवल समास) नित्यभास्वन्तः—कलापाः येषां ते (बहु०), **भास्वन्तः**—भास्+मतुप् (प्र० बहु०) । **नित्यज्योत्स्नाः**—नित्या ज्योत्स्ना येषां ते (बहु०) । **प्रतिहततमोवृत्तिरम्याः**—तमसां वृत्तिः तमोवृत्तिः (ष० त०) प्रतिहताः तमोवृत्तयः येषां ते (बहु०) प्रतिहततमोवृत्तयश्च ते रम्याः (कर्मधा०), **प्रतिहत**—प्रति+√हन्+क्त, **वृत्ति**—√वृत्त+क्तिन् ।

यद्यपि इस श्लोक को मल्लिनाथ ने प्रक्षिप्त माना है, परन्तु इस पर टीका लिखी है । यहाँ श्लोकों के क्रम में विभिन्न संस्करणों में अन्तर पाया जाता है । मल्लिनाथ जी ने इसे इसी क्रम में रखा है ।

प्रस्तुत श्लोक में नलिनियों में नायिका भाव गम्य है, परन्तु **हंसश्रेणीरचितरशनाः** इस पद में नलिनियों में मण्डलाकार हंस श्रेणी में रशनात्व का आरोप वाच्य है; अतः यहाँ **एकदेशविवर्ती रूपक** है तथा अन्य स्थलों के पादप आदि की अपेक्षा यहाँ के पादप आदि का वैशिष्ट्य वर्णन होने से **व्यतिरेक** एवं **परिसंख्या** अलङ्कार है । □

**प्रसङ्ग**—यक्ष अलकापुरी के यक्षों की उत्कर्षता का वर्णन करता हुआ कहता है कि—

**आनन्दोत्थं नयनसलिलं यत्र नान्यैर्निमित्तै-**

**र्नान्यस्तापः कुसुमशरजादिष्टसंयोगसाध्यात् ।**

नाप्यन्यस्मात्प्रणयकलहाद्विप्रयोगोपपत्ति-[1]
वित्तेशानां न च खलु वयो यौवनादिन्यदस्ति ॥४॥

**अन्वय:**—यत्र वित्तेशानां नयनसलिलम् आनन्दोत्थम् अन्यै: निमित्तै: न, इष्टसंयोगसाध्यात् कुसुमशरजात् (तापात्) अन्य: ताप: न, प्रणयकलहात् अन्यस्मात् विप्रयोगोपपत्ति: अपि न, यौवनात् अन्यत् वय: च न खलु अस्ति ॥४॥

**शब्दार्थ**—**यत्र**=जहाँ (अलकापुरी में), **वित्तेशानाम्**=यक्षों के, **नयनसलिलम्**=आँसू, **आनन्दोत्थम्**=आनन्द या प्रसन्नता से उत्पन्न, **अन्यै: निमित्तै:**=अन्य कारणों से, **न**=नहीं, **इष्टसंयोगसाध्यात्**=प्रियजन के मेल से दूर होने वाले, **कुसुमशरजात्**=कामदेव के वाण से उत्पन्न होने से, **अन्य: ताप:**=दूसरा संताप, **न**=नहीं है, **प्रणयकलहात्**=प्रणय कलह से, **अन्यस्मात्**=अन्य कारण से, **विप्रयोगोपपत्ति:**=वियोग की प्राप्ति भी, **न**=नहीं, **यौवनात्**=यौवन से, **वय:**=अवस्था ।

**अनुवाद**—**जहाँ (अलकापुरी में) यक्षों के आँसू आनन्द या प्रसन्नता से उत्पन्न (होते हैं), अन्य कारणों से नहीं, प्रियजन के मेल से दूर होने वाले, कामदेव के वाण से उत्पन्न (ताप) के अतिरिक्त (अन्य कोई) सन्ताप नहीं है, प्रणय कलह के अतिरिक्त अन्य (कारण) से वियोग की प्राप्ति भी नहीं (है) और यौवन के अतिरिक्त कोई दूसरी अवस्था भी नहीं है ॥४॥**

**संस्कृत-टीका**—यत्राऽलकायां यक्षाणाम् अश्रु आनन्दोद्भवम् आनन्देतरै: शोकादिभि: कारणै: न, प्रियसमागमनिवर्तनीयात् कामजन्यात् तापात् अन्य: संताप: न, प्रेमकलहात् अन्यस्मात् कारणात् विरहप्राप्तिरपि नास्ति युवावस्थाया: अतिरिक्तात् अन्यत् अवस्था च नास्ति ।

**सञ्जीवनी**—आनन्देति । यत्रालकायां वित्तेशानां यक्षाणाम् । 'वित्ताधिप: कुबेर: स्यात्प्रभौ धनिकयक्षयो:' इति शब्दार्णव: । आनन्दोत्थमानन्दजन्यमेव नयनसलिलम् । अन्यैर्निमित्तै: शोकादिभिर्न । इष्टसंयोगेन प्रियजनसमागमेन साध्यान्निवर्तनीयात् । न त्वप्रतीकार्यादित्यर्थ: । कुसुमशरजान्मदनशरजादन्यस्तापो नास्ति । प्रणयकलहादन्यस्मात्कारणाद्विप्रयोगोपपत्तिर्विरहप्राप्तिरपि नास्ति । किं च यौवनादन्यद्वयो वार्धकं नास्ति । श्लोकद्वयं प्रक्षिप्तम् ॥४॥

**टिप्पणी—आनन्दोत्थम्**—अलकापुरी में यक्षों की आँखों में आँसू हर्ष के कारण ही आते थे, दु:ख के कारण नहीं । भाव यह है कि वहाँ अलकापुरी में दु:ख नाम की कोई वस्तु नहीं है । सब और सदा सुख ही सुख रहता है, इसलिए यक्षों की आँखों में जो आँसू दिखायी देते हैं वे सब आनन्द के कारण हैं. दु:ख के कारण नहीं ॥४॥

**कुसुमशरजात्**—कामदेव के धनुष का दण्ड इक्षु से बना माना जाता है तथा प्रत्यञ्चा काले-काले भौंरों की श्रेणी से तथा उससे छोड़े जाने वाले वाण पाँच माने जाते हैं । जो निम्न हैं—

*अरविन्दमशोकं च चूतं च नवमल्लिका ।*
*नीलोत्पलं च पञ्चैते पञ्चवाणस्य सायका: ॥*

**इष्टसंयोगसाध्यात्**—अलका निवासी ज्वरादि से पीड़ित नहीं होते थे और यदि वे किसी से पीड़ित होते थे तो काम जन्य सन्ताप से और वह प्रिय मिलन से दूर हो जाता था ।

**प्रणयकलहात्**—प्रेमी पति के किसी अपराध के कारण पत्नी के रूठ जाने को प्रणयकलह कहा जाता है । यक्षों का पत्नियों से केवल मान के कारण ही क्षणिक वियोग होता था, किसी वैधव्य या प्रवास आदि के कारण नहीं ।

१. नाप्यन्यत्र प्रणयकलहा० ।

**वित्तेशानाम्**—वित्त का ईश अर्थात् धन का स्वामी । वित्तेश कुबेर और यक्ष दोनों के लिए प्रयुक्त होता है । यक्ष चूँकि कुबेर के कोष की रक्षा करते हैं इसलिए उन्हें भी वित्तेश कहा जाता है ।

**यौवनात्**—यक्ष देवयोनि मानी जाती है, इसलिए उनमें वृद्धावस्था नहीं होती, वे सदा युवावस्था में ही रहते हैं ।

**व्याकरण**—**आनन्दोत्थम्**—आनन्दात् उत्तिष्ठति इति, आनन्द+उद् +√स्था+क: (उपपद समास) । **नयनसलिलम्**—नयन्यो: सलिलम् (ष० त०) । **कुसुमशरजात्**—कुसुमानि एव शरा यस्य स कुसुमशर: कामदेव: (बहुव्रीहि) तस्मात् जात: कुसुमशरज: तस्मात् (प० त०), कुसुमशर+जन्+ड: (कर्तरि भूते) । **इष्टसंयोगसाध्यात्**—इष्टस्य संयोग: (ष० त०), तेन साध्य: (तृ० त०) तस्मात्, इष्+क्त=**इष्ट**, सम+√युज्+घञ्=**संयोग**: (भावे), √साध्+ण्यत्=**साध्य** (कर्मणि) । **प्रणयकलहात्**—प्रणयस्य कलह: (ष० त०) तस्मात् । **विप्रयोगोपपत्ति:**—विप्रयोगस्य उपपत्ति: (ष० त०), वि+प्र+√युज्+घञ्=**विप्रयोग**:, उप+√पद+क्तिन् (भावे)=**उपपत्ति**: । **वित्तेशानाम्**—वित्तानाम् ईश: (ष० त०) तेषाम् । **यौवनात्**—युवन्+अण्=यौवन, तस्मात् ।

प्रस्तुत श्लोक में आनन्द के आँसुओं का वर्णन करके दु:ख के आँसुओं का प्रतिषेध किया गया है; अत: **परिसंख्या** अलङ्कार है । □

**प्रसङ्ग**—यक्ष मेघ से अलकापुरी में यक्षों के उपभोग का वर्णन करता हुआ कहता है कि—

**यस्यां यक्षा: सितमणिमयान्येत्य हर्म्यस्थलानि**
**ज्योतिश्छाया कुसुमरचि[1]तान्युत्तमस्त्रीसहाया: ।**
**आसेवन्ते मधु रतिफलं[2] कल्पवृक्षप्रसूतं[3]**
**त्वद्गम्भीरध्वनिषु शनकै:[4] पुष्पकरेष्वाहतेषु ।।५।।**

**अन्वय**:—यस्यां यक्षा: उत्तमस्त्रीसहाया: (सन्त:) सितमणिमयानि ज्योतिश्छायाकुसुमरचितानि हर्म्यस्थलानि एत्य त्वद्गम्भीरध्वनिषु पुष्करेषु शनकै: आहतेषु कल्पवृक्षप्रसूतं मधु आसेवन्ते ।।५।।

**शब्दार्थ**—**यस्याम्**=जिसमें, **उत्तमस्त्रीसहाया:**=सुन्दर स्त्रियों के साथ, **सितमणिमयानि**=स्फटिक मणि से जटित, **ज्योतिश्छायाकुसुमरचितानि**=तारों के प्रतिबिम्ब रूपी पुष्पों से सुशोभित, **हर्म्यस्थलानि**=महलों की अटारियों में, **एत्य**=जाकर, **त्वद्गम्भीरध्वनिषु**=तुम्हारे समान गम्भीर ध्वनि वाले, **पुष्करेषु**=पुष्कर नामक बाजों के, **शनकै:**=धीरे-धीरे, **आहतेषु**=बजाये जाने पर, **कल्पवृक्षप्रसूतम्**=कल्पवृक्ष से उत्पन्न, **रतिफलम् मधु**=रतिफल नामक मदिरा का, **आसेवन्ते**=सेवन करते हैं ।

**अनुवाद**—**जिस (अलकापुरी) में यक्ष सुन्दर स्त्रियों के साथ मिलकर स्फटिक मणि से जटित (अत:) तारों के प्रतिबिम्ब रूपी पुष्पों से सुशोभित, महलों की अटारियों पर जाकर तुम्हारे समान गम्भीर ध्वनि वाले पुष्कर नामक बाजों (नगाड़ों) के धीरे-धीरे बजाये जाने पर, कल्पवृक्ष से उत्पन्न रतिफल नामक मदिरा का सेवन करते हैं ।।५।।**

---

१. ० कुसुमरचनान्युत्तम० ।
२. रतिरसम् ।
३. ०वृक्षप्रसूतिम् ।
४. मधुरम् ।

**संस्कृत-टीका**—हे मेघ ! यस्यामलकायां गुह्यकाः ललितललनाभिः समं रात्रौ स्फटिकमणिमयानि तारकाप्रतिबिम्बरूपैः पुष्पैः परिष्कृतानि सौधशिखराणि प्राप्य त्वत्सदृशगम्भीरशब्दयुक्तेषु पुष्करेषु मन्दं ताडितेषु कल्पवृक्षजातं रतिफलाख्यं मद्यं बारम्बारमास्वादयन्ति ।

**सञ्जीवनी**—यस्यामिति । यस्यामलकायां यक्षा देवयोनिविशेषा उत्तमस्त्रीसहाया ललिताङ्गनासहचराः सन्तः सितमणिमयानि स्फटिकमणिमयानि चन्द्रकान्तमयानि वा । अत एव ज्योतिषां तारकाणां छायाः प्रतिबिम्बान्येव कुसुमानि तै रचितानि परिष्कृतानि । 'ज्योतिस्तारागिनभाज्वालादृक्पुत्रार्थाध्वरात्मसु' इति वैजयन्ती । एतेन पानभूमेरम्लानशोभत्वमुक्तम् । हर्म्यस्थलान्येत्य प्राप्य । त्वद्गम्भीरध्वनिरिव ध्वनिर्येषां तेषु पुष्करेषु वाद्यभाण्डमुखेषु । 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले' इत्यमरः । शनकैर्मन्दमाहतेषु सत्सु । एतच्च नृत्यगीतयोरप्युपलक्षणम् । कल्पवृक्षप्रसूतं कल्पवृक्षस्य काङ्क्षितार्थप्रदत्वान्मध्वपि तत्र प्रसूतम् । रतिः फलं यस्य तद्रतिफलाख्यं मधु मद्यमासेवन्ते । आदृत्य पिबन्तीत्यर्थः । ('तालक्षीररसितामृतामलगुडोन्मत्तास्थिकालाह्वयादार्विन्द्रद्रुममोरटेक्षुकदलीगुल्मप्रसूनैर्युतम्। इत्थं चेन्मधुपुष्पभङ्ग्युपचितं पुष्पद्रुमूलावृतं क्वाथेन स्मरदीपनं रतिफलाख्यं स्वादु शीतं मधु ॥' इति मदिरार्णवः) ॥५॥

**टिप्पणी—हर्म्यस्थलानि**—यहाँ स्थल के दो अर्थ किये जा सकते हैं—(१) महलों की अटारियाँ, (२) महलों का भूमि भाग अर्थात् फर्श । परन्तु पहला अर्थ ही उचित प्रतीत होता है; क्योंकि तारों का प्रतिबिम्ब ऊँची अटारियों पर पड़ना स्वाभाविक है ।

**रतिफलम्**—रतिफल का सामान्य अर्थ रति क्रीड़ाजन्य सुख ही होता है अर्थात् संभोग सुख है फल जिसका, परन्तु मल्लिनाथ ने रतिफल को एक प्रकार की मदिरा माना है और मदिरार्णव के ग्रन्थ से उसका लक्षण उद्धृत किया है जो इस प्रकार है— *तालक्षीररसितामृतामलगुडोन्मत्तास्थिकालाह्वयादार्विन्द्रद्रुममोरटेक्षुकदलीगुल्मप्रसूनैर्युतम् । इत्थं चेन्मधुपुष्पभङ्ग्युपचितं पुष्पद्रुमूलावृतं क्वाथेन स्मरदीपनं रतिफलाख्यं स्वादुशीतं मधु ।*

**कल्पवृक्ष**—कल्पवृक्ष एक स्वर्गीय वृक्ष है जो याचक को अभीष्ट फल देता है । इसलिए इससे मदिरा भी उत्पन्न हो सकती है ।

**शनकैः**—यह शब्द साभिप्राय प्रयुक्त किया है । इसका अभिप्राय है कि पान गोष्ठी (Drinking symposium) के समय गीत, नृत्य के साथ तबला भी धीरे-धीरे बजाया जाता है; क्योंकि शृंङ्गार रस कोमल भावों में गिना जाता है । इसमें गीत और वाद्य की कठोरता नहीं होनी चाहिये, नहीं तो इसकी कोमलता नष्ट हो जाती है ।

**व्याकरण—सितमणिमयानि**—सिताः मणयः (कर्मधा०) तेषां विकाराः इति, सितमणि+मयट् । **एत्य**—आ+√इ+क्त्वा (ल्यप्) । **हर्म्यस्थलानि**—हर्म्याणां स्थालानि (ष० त०) । **ज्योतिश्छायाकुसुमरचितानि**—ज्योतिषां छायाः (ष० त०) ताः एव कुसुमानि (ष० त०) तैः रचितानि (तृ० त०) । **उत्तमस्त्रीसहायाः**—उत्तमाः स्त्रियः सहायाः येषां ते (बहु०) । **आसेवन्ते**—आ+√सेव् लट् प्र० पु० (बहु०) । **रतिफलम्**—रतिः फलम् यस्य तत् (बहु०) । **कल्पवृक्षप्रसूतम्**—कल्पवृक्षात् प्रसूतम् तत् (प० त०), **प्रसूतम्**—प्र+√सू+क्त । **त्वद्गम्भीरध्वनिषु**—गम्भीरश्चाऽसौ ध्वनिः (कर्मधा०) तव इव गम्भीरध्वनिर्येषां ते, तेषु (बहु०) । **शनकैः**—शनैः एव शनकैः शनैस्+अकच् । **आहतेषु**—आ+√हन्+क्त ।

प्रस्तुत श्लोक में **उदात्त** अलङ्कार है । ज्योतिश्छायाकुसुमरचितानि पद में **रूपक** तथा त्वद्गम्भीरध्वनिषु में **लुप्तोपमा** है । □

**प्रसङ्ग**—अलकापुरी की कन्याओं की क्रीड़ा का वर्णन करते हुए कवि कहता है कि—

**मन्दाकिन्याः सलिलशिशिरैः[1] सेव्यमाना मरुद्भि-**
**र्मन्दाराणामनुतटरुहां[2] छायया वारितोष्णाः ।**
**अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः**
**संक्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥६॥**

**अन्वयः**—यत्र मन्दाकिन्याः सलिलशिशिरैः मरुद्भिः सेव्यमानाः अनुतटरुहां मन्दाराणां छायया वारितोष्णाः अमरप्रार्थिताः कन्याः कनकसिकतामुष्टिनिक्षेपगूढैः अन्वेष्टव्यैः मणिभिः संक्रीडन्ते ॥६॥

**शब्दार्थ**—**यत्र**=जिस अलकापुरी में, **मन्दाकिन्याः**=गङ्गा नदी के, **सलिलशिशिरैः**=जल से शीतल, **मरुद्भिः**=पवनों द्वारा, **सेव्यमानाः**=सेवा की जाती हुई, **अनुतटरुहाम्**=किनारों पर उगे हुए, **मन्दाराणाम्**=मन्दार वृक्षों की, **छायया**=छाया से, **वारितोष्णाः**=रोकी गयी धूप वाली, **अमरप्रार्थिताः**=देवताओं द्वारा चाही जाने वाली, **कनकसिकतामुष्टिनिक्षेपगूढैः**=सोने की बालू में मुट्ठी में रखकर छिपायी गयी, **अन्वेष्टव्यैः**= खोजी जाने वाली, **मणिभिः**=मणियों से, **संक्रीडन्ते**=खेलती हैं ।

**अनुवाद**—**जिस (अलकापुरी) में गङ्गा नदी के जल से शीतल पवनों द्वारा सेवा की जाती हुई, किनारों पर उगे हुए मन्दार वृक्षों की छाया से रोकी गयी धूप वाली, देवताओं के द्वारा चाही जाने वाली, कन्याएँ सोने की बालू में मुट्ठी में रखकर छिपायी गयी, (अतएव) खोजी जाने वाली मणियों से खेलती हैं ॥६॥**

**संस्कृत-टीका**—हे मेघ ! यत्राऽलकायां गङ्गायाः सलिलशिशिरैः वायुभिः परिचर्यमाणाः सत्यः तटोत्पन्नानां मन्दारवृक्षाणां छायया निवारितातपाः देवाभिलषिताः यक्षकुमार्यः कनकबालुकामुष्टिस्थापनसंवृतैः मृग्यैः रत्नैः क्रीडन्ति, गुप्तमणिसंज्ञया दैशिकक्रीडया सम्यक् क्रीडन्तीति भावः ।

**सञ्जीवनी**—मन्दाकिन्या इति । यत्रालकायाममरैः प्रार्थिताः । सुन्दर्य इत्यर्थः । कन्या यक्षकुमार्यः । 'कन्या कुमारिकानार्योः' इति विश्वः । मन्दाकिन्या गंगायाः सलिललेन शिशिरैः शीतलैर्मरुद्भिः सेव्यमानाः सत्यः । तथानुतटं तटेषु रोहन्तीत्यनुतटरुहः । (क्विप्) । तेषां मन्दाराणां छाययाऽनातपेन वारितोष्णाः शमितातपाः सत्यः । कनकस्य सिकतासु मुष्टिभिर्निक्षेपेण गूढैः संवृतैरत एवान्वेष्टव्यैर्मृग्यैर्मणिभिः रत्नैः संक्रीडन्ते गुप्तमणिसंज्ञया दैशिकक्रीडया सम्यक् क्रीडन्तीत्यर्थः । ('क्रीडोऽनुसंपरिभ्यश्च' इत्यात्मनेपदम् ।) 'रत्नादिभिर्बालुकादौ गुप्तैर्द्रष्टव्यकर्मभिः । कुमारीभिः कृता क्रीडा नाम्ना गुप्तमणिः स्मृता । रासक्रीडा गूढमणिर्गुप्तकेलिस्तुलायनम् । पिच्छकन्दुकदण्डाद्यैः स्मृता दशिककेलयः ।' इति शब्दार्णवः ॥६॥

**टिप्पणी**—**मन्दाकिन्याः**—गङ्गा के अनेक नाम हैं; जैसे—जह्नुतनया, जाह्नवी, भागीरथी, मन्दाकिनी आदि । गङ्गा स्वर्ग, मर्त्य और पाताल तीनों लोकों में अवस्थित है । स्वर्ग में रहने वाली गङ्गा को मन्दाकिनी, मर्त्य लोक में स्थित गङ्गा को भागीरथी तथा पाताल में स्थित गङ्गा को भोगवती कहते हैं । केदारनाथ से होकर बहने वाली गङ्गा की धारा को भी मन्दाकिनी कहते हैं । पौराणिक आख्यानों में हिमालय को देवताओं का वास स्थान बताया गया है । इसी कारण कैलाश में स्थित अलका की समीपवर्तिनी गङ्गा को मन्दाकिनी कहा जाता है ।

**मन्दाराणाम्**—मन्दार पाँच देव वृक्षों में से एक है । अमरकोश में पाँच वृक्ष इस प्रकार बताये गये हैं—

१. पयसि शिशिरैः ।
२. तटवनरुहाम् ।

*पञ्चैते देवतरवो मन्दारः पारिजातकः ।*
*सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥*

**कनकसिकतामुष्टिनिक्षेपगूढै:**—यह एक देशी खेल है । इसमें एक बालक हाथ में मणि आदि को लेकर किसी रेत के ढेर में छिपाता है और दूसरे बालक एकत्रित किये गये रेत में उसे ढूँढते हैं । शब्दार्णव में इस खेल को गुप्तमणि या गूढमणि नाम से पुकारा जाता है । शब्दार्णव में श्लोक इस प्रकार है—

*रत्नादिभिर्बालुकाऽऽदौ गुप्तैर्द्रष्टव्यकर्मभिः ।*
*कुमारीभिः कृता क्रीडा नाम्ना गुप्तमणिः स्मृता ॥*
*रासक्रीडा गूढमणिर्गुप्तिकेलिस्तुलायनम् ।*
*पिच्छकन्दुकदण्डाद्यैः स्मृता दैशिककेलयः ॥*

**व्याकरण—सलिलशिशिरै:**—सलिलेन शिशिरैः (तृ० पु०) । **सेव्यमाना**—√सेव्+यक्+मुक्+शानच् । **अनुतटरुहाम्**—तटेषु इति अनुतटम् (अव्ययीभाव) अनुतटं रोहन्ति इति तेषाम् (उप० त०) । **वारितोष्णाः**—वारितः उष्णः यासां ताः (बहु०), **वारिताः**—√वृ+णिच्+क्त। **अन्वेष्टव्यैः**—अनु+√इष्+तव्यत्, पुल्लिङ्ग तृ० बहु०। **कनकसिकतामुष्टिनिक्षेपगूढैः**—कनकस्य सिकताः (ष० त०) तासु मुष्टिभिः निक्षेपः (तृ० त०) कनकसिकतासु मुष्टिनिक्षेपः (स० त०) तेन गूढैः (तृ० त०), **निक्षेपः**—नि+√क्षिप्+घञ्, **गूढः**—गुह्+क्त । **संक्रीडन्ते**—सम्+√क्रीड+लट् ल० प्र० पु० बहुव०, सम्, अनु और परि उपसर्गपूर्वक क्रीड् धातु का प्रयोग होने से आत्मनेपद। **अमरप्रार्थिताः**—अमरैः प्रार्थिताः (तृ० त०), **प्रार्थितः**—प्र+√अर्थ+णिच्+क्त (कर्मणि) । **कन्याः**—कमनीया भवति, क्वेयं नेतव्या, कमनेन नीयते इति ।

प्रस्तुत श्लोक में लोकातिशय सम्पत्ति का वर्णन होने से **उदात्त** अलङ्कार है । □

**प्रसङ्ग**—यक्ष मेघ से अलकापुरी के स्त्री-पुरुषों की काम-क्रीड़ा का वर्णन करता हुआ कहता है कि—

**नीवीबन्धोच्छ्वसित शिथिलं[1] यत्र बिम्बाधराणां[2]**
**क्षौमं[3] रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।**
**अर्चिस्तुङ्गानभिमुखमपि[4] प्राप्य रत्नप्रदीपान्**
**ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥७॥**

**अन्वयः**—यत्र अनिभृतकरेषु प्रियेषु नीवीबन्धोच्छ्वसितशिथिलं क्षौमं रागात् आक्षिपत्सु ह्रीमूढानां बिम्बाधराणां चूर्णमुष्टिः अर्चिस्तुङ्गान् रत्नप्रदीपान् अभिमुखं प्राप्य अपि विफलप्रेरणा भवति ॥७॥

**शब्दार्थ—अनिभृतकरेषु**=चञ्चल हाथों वाले, **नीवीबन्धोच्छ्वसितशिथिलम्**=अधोवस्त्र की गाँठ के खुल जाने से ढीले हुए, **क्षौमम्**=रेशमी वस्त्र को, **रागेषु**=राग के कारण, **आक्षिपत्सु**=हटा देने पर, **ह्रीमूढानाम्**=लज्जा से हक्की-बक्की हुई, **बिम्बाधराणाम्**=बिम्ब फल के समान ओठों

१. ० बन्धोच्छ्वसन० ।
२. यक्षाङ्गनानाम् ।
३. वासः कामात् ।
४. ०नभिमुखगतान् ।

वाली, **चूर्णमुष्टिः**=चूर्ण की मुट्ठी, **अर्चिस्तुङ्गान्**=किरणों से उन्नत, **रत्नप्रदीपान्**=रत्नरूपी दीपों के, **अभिमुखम्**=सामने, **प्राप्य**=पहुँचकर, **विफलप्रेरणा**=निष्फल फेंकी हुई ।

**अनुवाद**—**जिस (अलकापुरी) में चञ्चल हाथों वाले प्रेमियों के द्वारा अधोवस्त्र की गाँठ के खुल जाने से ढीले हुए रेशमी वस्त्र को राग के कारण हटा देने पर लज्जा से हक्की-बक्की हुई, बिम्ब फल के समान ओठों वाली (स्त्रियों) की चूर्ण की मुट्ठी किरणों से उन्नत, रत्नरूपी दीपकों के सामने पहुँचकर भी निष्फल फेंकी हुई हो जाती है ।।७।।**

**संस्कृत-टीका**—हे मेघ ! यस्यामलकायां चञ्चलहस्तैः प्रियैः वसनग्रन्थिबन्धत्रुटितश्लथं दुकूलम् अधोवस्त्रं वा कामात् आहरत्सु सत्सु लज्जातिशयेन बिम्बौष्ठीनाम् मुष्टिपरिमितकुङ्कुमादिचूर्णं मयूखोन्नतान् मणिदीपान् समुखम् प्राप्य अपि निष्फलवेगा भवति ।

**सञ्जीवनी**—नीवीति । यत्रालकायामनिभृतकरेषु चपलहस्तेषु प्रियेषु । नीवी वसनग्रन्थिः । 'नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससि' इति विश्वः । सैव बन्धो नीवीबन्धः । चूतवृक्षवदपौनरुक्त्यम्। तस्योच्छ्वसितेन त्रुटितेन शिथिलं क्षौमं दुकूलं रागादाक्षिपत्स्वाहरत्सु सत्सु ह्रीमूढानां लज्जाविधुराणाम्। बिम्बं बिम्बाकारफलम् । 'बिम्बं फले बिम्बिकायाः प्रतिबिम्बे च मण्डले' इति विश्वः । बिम्बमिवाधरो यासां तासां बिम्बाधराणां स्त्रीविशेषाणाम् । 'विशेषाः कामिनी कान्ता भीरुर्बिम्बाधराऽङ्गना' इति शब्दार्णवः । चूर्णस्य कुङ्कुमादेर्मुष्टिः । अर्चिभिर्मयूखैस्तुङ्गान् 'अर्चिभिर्मयूखशिखयोः' इति विश्वः। रत्नान्येव प्रदीपानभिमुखं यथा तथा प्राप्यापि विफलप्रेरणा दीपनिर्वापणाक्षमत्वान्निष्फलवेगा भवति । अत्राङ्गनानां रत्नप्रदीपनिर्वापणप्रवृत्त्या मौग्ध्यं व्यज्यते ।।७।।

**टिप्पणी**—**नीवीबन्धोच्छ्वसितशिथिलम्**—अधोवस्त्र की गांठ के खुल जाने के कारण ढीला । नीवी का अर्थ स्त्रियों के नीचे के वस्त्र की गांठ होता है तथा नीवी अधोवस्त्र को भी कहते हैं; क्योंकि यहाँ बन्ध शब्द का प्रयोग किया गया है इसलिए नीवी से अधोवस्त्र अर्थ लेना अधिक उपयुक्त दिखायी पड़ता है ।

**बिम्बाधराणाम्**—बिम्ब फल के समान (लाल) ओष्ठ वाली स्त्री को बिम्बाधरा कहते हैं । अथवा प्रियतम के बार-बार चुम्बन करने से अथवा दशनक्षत करने के कारण बिम्ब फल के समान जिनके लाल ओष्ठ हैं, वे बिम्बाऽधरा कहलाती हैं, अथवा शब्दार्णव के अनुसार स्त्री विशेष को बिम्बाऽधरा कहते हैं—

*"विशेषाः कामिनी कान्ता भीरुर्बिम्बाऽधराङ्गना ।"*

**विफलप्रेरणा**—निष्फल वेग वाली—अभिप्राय यह है कि जब रति क्रीड़ा के लिए प्रियतम अपनी प्रेमिकाओं के वस्त्र उतारते हैं तो वे प्रेमिकाएँ उनके सामने नग्नावस्था में लज्जा के मारे शर्म से गढ़ जाती हैं; अतः वे मणियों के प्रज्ज्वलित दीपकों को बुझाने का प्रयास करती हैं और उनके ऊपर मुट्ठी भरकर चूर्ण फेंकती हैं, किन्तु वे दीपक नहीं बुझते; क्योंकि वे तेल के दीपक नहीं हैं वे तो मणिमय दीपक हैं । इस कारण उनका प्रयास निष्फल रहता है । इस प्रकार यहाँ प्रेमिकाओं का मुग्धापन व्यञ्जित होता है, वे मुग्धा भोली-भाली नायिकाएँ हैं, जो प्रियतम के सहवास से लजाती हैं ।

**व्याकरण**—**नीवीबन्धोच्छ्वसिताशिथिलम्**—नीवी एव बन्धः (कर्मधारय) अथवा नीव्याः बन्धः (ष० त०) तस्य उच्छ्वसितम् (ष० त०) तेन शिथिलम् (तृ० त०), **उच्छ्वसितम्**—उद्+√श्वस्+क्त (भावे) । **बिम्बाधराणाम्**—बिम्बमिव अधरो यासां ताः बिम्बाधराः (बहु०) तासाम् । **क्षौमम्**—क्षुमाया विकारः क्षौमं तत् क्षुमा+अण् । **रागात्**—√रञ्ज्+घञ् (भावे) हेतौ पञ्चमी । **अनिभृतकरेषु**—न निभृताः (नञ् त०) अनिभृताः करा येषां ते, तेषु (बहु०) । **निभृताः**—नि+√भृ+क्त।

**आक्षिपत्सु**—आ+√क्षिप्+शतृ (पु०) (स० बहुव०)। **अर्चिस्तुङ्गान्**—अर्चिभि: तुङ्गा: (तृ० त०) तान्। **अभिमुखम्**—मुखम् प्रति (अव्ययी० स०)। **प्राप्य**—प्र+√आप्+क्त्वा (ल्यप्)। **रत्नप्रदीपान्**—रत्नानि एव प्रदीपा: (कर्मधा०) तान्। **ह्रीमूढानाम्**—ह्रिया मूढानाम् (तृ० त०)। **विफलप्रेरणा**—विगतं फलं यस्या सा विफला (बहु०), विफला प्रेरणा यस्या: सा: (बहु०)। **चूर्णमुष्टि:**—चूर्णस्य मुष्टि: (ष० त०)।

प्रस्तुत श्लोक में बिम्बाधराणाम् में **लुप्तोपमा** है तथा दीपक बुझाने के हेतु चूर्णमुष्टि होने पर भी उनके न बुझने से **विशेषोक्ति** है। □

**प्रसङ्ग**—यक्ष मेघ से अलकापुरी में मेघों का वर्णन करते हुए कहता है कि—

**नेत्रा नीता: सततगतिना यद्विमानाग्रभूमि-**
**रालेख्यानां सलिलकणिकादोषमुत्पाद्य[1] सद्य:।**
**शङ्कास्पृष्टा इव जलमुचस्त्वादृशा जालमार्गै[2]-**
**र्धूमोद्गारानुकृतिनिपुणा:[3] जर्जरा निष्पतन्ति ॥८॥**

**अन्वय:**—नेत्रा सततगतिना यद् विमानाग्रभूमी: नीता: आलेख्यानां सलिलकणिकादोषम् उत्पाद्य सद्य: शङ्कास्पृष्टा: इव धूमोद्गारानुकृतिनिपुणा: त्वादृशा: जलमुच: जर्जरा: जलमार्गै: निष्पतन्ति ॥८॥

**शब्दार्थ**—**नेत्रा**=प्रेरक, **सततगतिना**=वायु द्वारा, **यद्विमानाग्रभूमी:**=जिस (अलका) के सात मंजिलों वाले भवनों के ऊपरी भाग में, **नीता:**=ले जाये गये, **आलेख्यानाम्**=चित्रों में, **सलिलकणिकादोषम्**=जल कणों से दोष को, **उत्पाद्य**=उत्पन्न करके, **सद्य:**=शीघ्र ही, **शङ्कास्पृष्टा**=भय से स्पर्श किये गये, **धूमोद्गारानुकृतिनिपुणा:**=धुएँ के निकलने का अनुकरण करने में निपुण, **त्वादृशा:**=तुम्हारे जैसा, **जलमुच:**= मेघ, **जर्जरा:**=छिन्न-भिन्न होकर, **जालमार्गै:**=खिड़कियों में से, **निष्पतन्ति**=निकल जाते हैं।

**अनुवाद—प्रेरक वायु द्वारा जिस (अलकापुरी) के सात मंजिलों वाले भवनों के ऊपर के भागों में ले जाये गये, चित्रों में जल कणों से दोष को उत्पन्न करके, शीघ्र ही भय से स्पर्श किये गये, मानो धुएँ के निकलने का अनुकरण करने में निपुण तुम्हारे जैसे मेघ छिन्न-भिन्न होकर खिड़कियों में से निकल जाते हैं ॥८॥**

**संस्कृत-टीका**—हे मेघ ! प्रेरकवायुना यत्र अलकायां सप्तभूमिकभवनोपरिभूमी: प्रापिता: चित्राणां स्वजलकणिकादोषं जनयित्वा शीघ्रमेव भयाविष्टा: इव धूमनिर्गमस्य अनुकरणे कुशला: भवादृशा: मेघा: विशीर्णा: सन्त: गवाक्षमार्गै: निष्क्रामन्ति।

**सञ्जीवनी**—नेत्रेति। हे मेघ, नेत्रा प्रेरकेण सततगतिना सदागतिना वायुना। 'मातरिश्वा सदागति:' इत्यमर:। यद्विमानाग्रभूमी: यस्या अलकाया विमानानां सप्तभूमिकभवनानामग्रभूमीरुपरिभूमिका नीता: प्रापिता:। त्वमिव दृश्यन्त इति त्वादृशा:। त्वत्सदृशा इत्यर्थ:। ('त्वदादिषु दृशोऽनालोचने कञ्च' इति कञ्प्रत्यय:।) जलमुचो मेघा:। आलेख्यानां सच्चित्राणाम्। 'चित्रे लिखितरूपाद्यं स्यादालेख्यं तु यत्नत:' इति शब्दार्णव:। स्वजलकणिकाभिर्जलकणैर्दोषं स्फोटनमुत्पाद्य सद्य:शङ्कास्पृष्टा

१. स्वजलकणिकादोषम्।
२. यन्त्रजालै; यत्र जालै:।
३. ०निपुणम्।

सापराधत्वाद्भयाविष्टा इव । 'शंका वितर्कभययोः' इति शब्दार्णवः । धूमोद्गारस्य धूमनिर्गमस्यानुकृतावनुकरणे निपुणाः कुशलाः । जर्जरा विशीर्णाः सन्तः जालमार्गैर्गवाक्षरन्ध्रैर्निष्पतन्ति निष्क्रामन्ति । (केनचिदन्तःपुरसंचारवता दूतेन गूढवृत्त्या रहस्यभूमिं प्रापितास्तत्र स्त्रीणां व्यभिचारदोषमुत्पाद्य सद्यः साशङ्का कलृप्तवेषान्तरा जाराः क्षुद्रमार्गैर्निष्क्रामन्ति तद्वदिति ध्वनिः ।) प्रकृतार्थे शङ्कास्पृष्टा इवेत्युत्प्रेक्षा ॥८॥

**टिप्पणी—सततगतिना**—निरन्तर गति करने वाली, वायु सदा संचरण करती रहती है; अतः निरन्तर गतिशील रहने के कारण वायु को सततगति कहते हैं ।

**विमानाग्रभूमीः**—विमान—सात मञ्जिलों वाले ऊँचे भवनों को कहते हैं, अग्रभूमि ऊपर का भाग, छत, छज्जा, अटारी । यहाँ अग्रभूमि का अभिप्राय अटारी या सबसे ऊपर की मंजिल है।

**सलिलकणिकादोषम्**—जल की बूँदें जहाँ भी पड़ती हैं वहीं खराब कर देती हैं । रंगीन चित्रों पर गिरने से रंग फूल कर खराब हो जाते हैं ।

**शङ्कास्पृष्टाः**—यहाँ शङ्का का अर्थ भय है । भय मेघों को अपराध करने पर हुआ; क्योंकि मेघों ने अपने जल बिन्दुओं से चित्रों को खराब कर दिया है, इस कारण वे अपने को दोषी मान रहे हैं; अतः खिड़कियों से निकल भागते हैं ।

**व्याकरण—नेत्रा**—√नी+तृच्, तृ० एकव० । **नीताः**—√नी+क्त (तृ० एकव०) । **सततगतिना**—सततं गतिर्यस्य सः सततगतिः (बहुव्रीहि) तेन । **यद्विमानाग्रभूमीः**—विशेषेण मीयन्ते यानि तानि=विमानानि अग्राभूमिः अग्रभूमिः (कर्मधा०) यस्य विमानानि (ष० त०) तेषाम् अग्रभूमयः (ष० त०) ताः । **आलेख्यानाम्**—आ+√लिख्+ण्यत् (ष० बहुव०) । **सलिलकणिकादोषम्**—सलिलस्य कणिकाः (ष० त०) ताभिः कृतः दोषः (मध्यमपदलोपी स०) तम् । **उत्पाद्य**—उत्+√पद+णिच् +क्त्वा (ल्यप्) । **शङ्कास्पृष्टाः**—शङ्कया स्पृष्टाः (तृ० त०) । **स्पृष्ट**—√स्पृश्+क्त। **जलमुचः**—जलं मुञ्चन्ति इति (उपपद स०), जल+मुच्+√क्विप् । **त्वादृशाः**—त्वमिव दृश्यन्ते इति त्वादृशाः, युष्मद्+दृश्+कञ् (त्यदादिषु दृशोऽनालोचने कञ् च) ''इति कञ्'' इत्यनेन, युष्मदः त्वादेशः 'आ सर्वनाम्नः इति सूत्रेण आत्वम्' । **जालमार्गैः**—जालानां मार्गैः (ष० त०) । **धूमोद्गारानुकृतिनिपुणाः**—धूमस्य उद्गारः (ष० त०) तस्य अनुकृतिः (ष० त०) तस्यां निपुणाः (स० त०) । **उद्गारः**—उत्+√गृ+घञ् । **अनुकृतिः**—अनु+√कृ+क्तिन् । **निष्पतन्ति**—निस्+√पत्+लट् ल०, प्र० पु० बहुव०।

**विशेष**—आचार्य मल्लिनाथ के अनुसार यहाँ यह ध्वनि है कि—जैसे दूत द्वारा अन्तःपुर में प्रविष्ट कराये गये जार स्त्रियों से व्यभिचार करके अपराध के डर से वेश बदलकर खिड़की आदि से भाग जाते हैं उसी प्रकार यहाँ वायु द्वारा ऊँचे महलों की अटारियों में पहुँचाये गये बादल वहाँ के चित्रों को बूँदों से बिगाड़कर अपराध के भय से धुएँ का रूप बनाकर खिड़कियों के रास्ते से निकल जाते हैं ।

प्रस्तुत श्लोक में स्त्रियाँ और आलेख्य में लिङ्ग साम्य न होने के कारण **समासोक्ति** अलङ्कार नहीं है, अपितु 'शङ्कास्पृष्टा इव' में **उत्प्रेक्षा** अलंकार है । □

**प्रसङ्ग—यक्ष मेघ से कहता है कि अलकापुरी में स्त्रियों की रतिजन्य थकान को चन्द्रकान्त मणियाँ दूर करती हैं—**

यत्र स्त्रीणां प्रियतमभुजोच्छ्वासितालिङ्गितानाम्[1]-
मङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः ।
त्वत्संरोधापगमविशदैश्चन्द्रपादैर्निशीथे[2]
व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥९॥

**अन्वयः**—यत्र निशीथे त्वत्संरोधापगमविशदैः चन्द्रपादैः स्फुटजललवस्यन्दिनः तन्तुजालावलम्बाः चन्द्रकान्ताः प्रियतमभुजोच्छ्वासितालिङ्गितानां स्त्रीणां सुरतजनिताम् अङ्गग्लानिं व्यालुम्पन्ति॥९॥

**शब्दार्थ**—**निशीथे**=अर्द्ध रात्रि में, **त्वत्संरोधापगमविशदैः**=तुम्हारी रुकावट के हट जाने से निर्मल, **चन्द्रपादैः**=चन्द्र किरणों से, **स्फुटजललवस्यन्दिनः**=स्वच्छ जलकण की बूँदों को टपकाने वाली, **तन्तुजालावलम्बाः**=झालरों में लटकती हुई, **चन्द्रकान्ताः**=चन्द्रकान्त मणियाँ, **प्रियतमभुजोच्छ्वासितालिङ्गितानाम्**=प्रियतमों की भुजाओं में ढीले पड़े आलिङ्गनों वाली, **सुरतजनिताम्**=रतिक्रीड़ा से उत्पन्न, **अङ्गग्लानिम्**=शारीरिक थकान को, **व्यालुम्पन्ति**=दूर करती है।

**अनुवाद**—**जहाँ (अलकापुरी में) अर्द्ध रात्रि में तुम्हारी रुकावट के हट जाने से निर्मल चन्द्रकिरणों (के सम्पर्क) के कारण स्वच्छ जलकण की बूँदों को टपकाने वाली झालरों में लटकती हुई, चन्द्रकान्त मणियाँ प्रियतमों की भुजाओं से ढीले पड़े आलिङ्गनों वाली स्त्रियों की रतिक्रीड़ा से उत्पन्न शारीरिक थकान को दूर करती हैं ॥९॥**

**संस्कृत-टीका**—हे मेघ ! यत्रालकायामर्धरात्रे मेघावरणाभावेन निर्मलैः चन्द्रकिरणैः व्यक्तवारिबिन्दुस्राविणः सूत्रजालावलम्बिनः चन्द्रकान्तमणयः प्रियतमबाहुपाशशिथिलीकृतानाम् योषिताम् रतिक्रीडोत्पन्नाम् शरीरस्वेदम् निवारयन्ति ।

**सञ्जीवनी**—यत्रेति । यत्रालकायां निशीथेऽर्धरात्रे । 'अर्धरात्रिनिशीथौ द्वौ' इत्यमरः। त्वत्संरोधस्य मेघावरणस्यापगमेन विशदैर्निर्मलैश्चन्द्रपादैश्चन्द्रमरीचिभिः 'पादा रश्म्यङ्घ्रितुर्यांशाः' । इत्यमरः । स्फुटजललवस्यन्दिन उल्बणाम्बुकणस्राविणस्तन्तुजालावलम्बा वितानलम्बिसूत्रपुञ्जाधाराः । तद्गुणगुम्फिता इत्यर्थः । चन्द्रकान्ताश्चन्द्रकान्तमणयः प्रियतमानां भुजैरालिङ्गनेषूच्छ्वासितानां प्रशिथिलीकृतानाम्। श्रान्त्या जलसेकाय वा शिथिलितालिङ्गनानामिति यावत् । स्त्रीणां सुरतजनितामङ्गग्लानिं—शरीरखेदम्। अवयवानां म्लानतामिति यावत् । व्यालुम्पन्त्यपनुदन्ति ॥९॥

**टिप्पणी**—**स्फुटजललवस्यन्दिनः**—चन्द्रमा की किरणों के सम्पर्क से चन्द्रकान्त मणि द्रवित हो जलस्राव करने लगती है । साम्य के लिए देखिये—शिशुपालवध ३/४४, उत्तररामचित ६/१२।

**व्याकरण**—**प्रियतमभुजोच्छ्वासितालिङ्गितानाम्**—प्रियतमानां भुजाः (ष० त०) तैः उच्छ्वासितानि (तृ० त०) तादृशानि आलिङ्गितानि यासां ताः (बहु०) तासाम्, **उच्छ्वासित**—उद्+√श्वस्+णिच्+क्त, **आलिङ्गितम्**—आ+√लिङ्ग+क्त (भावे) । **अङ्गग्लानिम्**—अङ्गानां ग्लानिः ताम्, (प० त०), **ग्लानिः**—ग्लै+क्तिन् (भावे) । **सुरतजनिताम्**—सुरतेन जनिता (तृ० त०) ताम्, **जनिता**—√जन्+णिच्+क्त+टाप् । **तन्तुजालावलम्बाः**—तन्तूनां जालम् (ष० त०) तत् अवलम्बो येषां ते (बहु०), **अवलम्ब**—अव+√लम्ब्+अच् (कर्तरि) । **त्वत्संरोधापगमविशदैः**—तव संरोधः (ष० त०) तस्य अपगमः (ष० त०) तेन विशदाः तैः (तृ० त०) । **संरोधः**—सम्+√रुध्+घञ्। **चन्द्रपादैः**—चन्द्रस्य पादाः (ष० त०), तैः । **व्यालुम्पन्ति**—वि+आ+√लुप+लट् (प्र० पु० बहुव०)।

१. ०भुजालिङ्गनोच्छ्वासितानाम् ।
२. ०विशदैरिन्दुपादैर्नि०, ०र्द्योतिश्चन्द्रपादैः, ०प्रेरिताश्चन्द्रपादैः ।

**स्फुटजललवस्यन्दिन:**—जलस्य लवा: (ष० त०) स्फुटा: जललवा: (कर्मधारय) तान् स्यन्दन्ते इति (उप० त०) स्फुटजललव+√स्यन्द्+णिनि (कर्तरि)।

इस श्लोक में समृद्धिपूर्ण वस्तु का वर्णन करने से **उदात्त** तथा **काव्यलिङ्ग** अलङ्कार है।

□

**प्रसङ्ग**—यक्ष मेघ से कहता है कि अलकापुरी में कामुक जनों के द्वारा बाह्योद्यान का उपयोग किया जाता है—

**[1]अक्षय्यान्तर्भवननिधय: प्रत्यहं रक्तकण्ठै-**
**रुद्गायद्भिर्धनपतियश: किन्नरैर्यत्र सार्धम्।**
**वैभ्राजाख्यं विबुधवनितावारमुख्यासहाया**
**बद्धालापा बहिरुपवनं कामिनो निर्विशन्ति ॥१०॥**

**अन्वय:**—यत्र अक्षय्यान्तर्भवननिधय: विबुधवनितावारमुख्यासहाया: बद्धालापा कामिन: प्रत्यहं रक्तकण्ठै: धनपतियश: उद्गायद्भि: किन्नरै: सार्धं वैभ्राजाख्यं बहिरुपवनं निर्विशन्ति ॥१०॥

**शब्दार्थ**—**अक्षय्यान्तर्भवननिधय:**=भवनों के अन्दर अपार निधियाँ रखने वाले, **विबुधवनितावारमुख्यासहाया:**=अप्सरा रूपी वेश्याओं को साथ लिये, **बद्धालापा:**=बातचीत करते हुए, **कामिन:**=कामीजन, **प्रत्यहम्**=प्रतिदिन, **रक्तकण्ठै:**=मधुर स्वर वाले, **धनपतियश:**=कुबेर के यश को, **उद्गायद्भि:**=ऊँचे स्वर में गाते हुए, **किन्नरै:**=किन्नरों के, **सार्धम्**=साथ, **वैभ्राजाख्यम्**=वैभ्राज नाम वाले, **बहिरुपवनम्**=बाहरी उद्यान का, **निर्विशन्ति**=उपभोग करते हैं, आनन्द लेते हैं।

**अनुवाद**—**जहाँ (अलकापुरी में) भवनों के अन्दर अपार निधियाँ रखने वाले, अप्सरा रूपी वेश्याओं को साथ लिये बातचीत करते हुए कामीजन प्रतिदिन मधुर स्वर वाले (और) कुबेर के यश को ऊँचे स्वर में गाने वाले किन्नरों के साथ वैभ्राज नाम वाले बाहरी उद्यान का उपभोग करते हैं ॥१०॥**

**संस्कृत-टीका**—यत्रालकापुर्यामपरिमेयधना अप्सरोवेश्यासहचरा: विहितसंभाषणा: कामुका: प्रतिदिनम् मधुरकण्ठध्वनिभि: कुबेरकीर्तिम् उच्चैर्गायद्भि: किन्नरै: सह: चैत्ररथाख्यं बाह्योद्यानं सेवन्ते।

**सञ्जीवनी**—अक्षय्येति। यत्रालकायाम् क्षेतुं शक्या: क्षय्या:। ('क्षय्यजय्यौ शक्यार्थे' इति निपात:। ततो नञ्समास:।) भवनानामन्तरन्तर्भवनम्। (अव्ययं विभक्ति— 'इत्यादिनाऽव्ययीभाव:।) अक्षय्या अन्तर्भवने निधयो येषां ते तथोक्ता:। यथेच्छभोगसंभावनार्थमिदं विशेषणम्। विबुधवनिता अप्सरास्ता एव वारमुख्या वेश्यास्ता एव सहाया येषां ते तथोक्ता:। वारस्त्री गणिका वेश्या रूपाजीवाऽथ सा जनै:। सत्कृता वारमुख्या स्यात् इत्यमर:। बद्धालापा: संभावितसंलापा: कामिन: कामुका: प्रत्यहमहन्यहनि। ('अव्ययं विभक्ति—' इत्यादिना समास:)। रक्तो मधुर: कण्ठ: कण्ठध्वनिर्येषां ते तै: सुन्दर कण्ठध्वनिभिर्धनपतियश: कुबेरकीर्तिमुद्गायद्भिरुच्चैर्गायद्भि:। देवगानस्य गान्धारग्रामत्वात्तारतरं गायद्भिरित्यर्थ:। किन्नरै: सार्धं सह। विभ्राजस्येदं वैभ्राजमित्याख्या यस्य तद्वैभ्राजाख्यम्। 'विभ्राजेन गणेन्द्रेण जातं वैभ्राजमाख्यया' इति शंभुरहस्ये। चैत्ररथस्य नामान्तरमेतत् बहिरुपवनं बाह्योद्यानं निर्विशन्त्यनुभवन्ति ॥१०॥

**टिप्पणी**—**वैभ्राजाख्यम्**—यह कुबेर का चित्ररथ द्वारा बनाया गया उद्यान है। विभ्राज शिव

---

१. अक्षीणान्तर्भुवन।

का एक गण है, जो इस उद्यान की रक्षा करता है अतएव उद्यान का नाम भी वैभ्राज पड़ गया है। यह वही उद्यान है जिसका वर्णन पूर्वमेघ/७ में किया गया है।

**विबुधवनितावारमुख्यासहायाः**—यहाँ वनिता √वन् (चाहना)+क्त+टाप् का अर्थ पत्नी न होकर सामान्य स्त्री या चाही गयी स्त्री है। यहाँ चाही गयी स्त्री ग्राह्य है। इसलिए विबुधवनिता का अर्थ देवों के द्वारा चाही गयी या अप्सरा है। वारमख्या का अर्थ जन पूजित वेश्या होता है। अमरकोश के अनुसार—

*वारस्त्री गणिका वेश्या रूपा जीवाऽथ सा जनैः। सत्कृता वारमुख्या स्यात्।*

**व्याकरण—अक्षय्यान्तर्भवननिधयः**—क्षेतुं शक्याः क्षय्याः न क्षय्या अक्षय्या (नञ् त०) भवनानाम् अन्तः (अव्ययी०) अक्षय्याः अन्तर्भवने निधयः येषाम् (बहु०) ते, **अक्षय्य**—नञ्+√क्षि+यत्, **निधिः**—नि+√धा+कि (पुंल्लिङ्ग)। **प्रत्यहम्**—अहनि अहनि इति (अव्ययी०)। **रक्तकण्ठैः**—रक्तः कण्ठः येषाम् (बहु०) तैः, **रक्त**—√रञ्ज्+क्त। **उद्गायद्भिः**—उत्+√गै+शतृ (तृ० बहु०)। **धनपतियशः**—धनानां पतिः (ष० त०) तस्य यशस्तत् (ष० त०)। **किन्नरैः**—सार्धम् के योग में ''सहयुक्तेऽप्रधाने'' इस सूत्र से तृ० हुई है। **वैभ्राजाख्यम्**—वैभ्राजम् इति आख्या (बहु०) तत्, विभ्राज+अण्। **विबुधवनितावारमुख्यसहाया**—विबुधानां वनिताः (ष० त०) ताः एव वारमुख्याः (रूपकसमास) ताः सहायाः येषां ते (बहुव्रीहि)। **बद्धालापाः**—बद्धः आलापः येषाम् ते (बहुव्रीहि), **बद्धः**—बन्ध्+क्त, **आलापः**—आङ्+ल्यप्+घञ्। **बहिरुपवनम्**—बहिः उपवनम् (केवल समास)। **निर्विशन्ति**—निर्+विश्+लट् (प्र० पु० बहुव०), **कामिनः**—कमु+णिनि।

प्रस्तुत श्लोक में **उदात्त** अलङ्कार है। □

**प्रसङ्ग**—यक्ष मेघ को बताता है कि अलकापुरी में अभिसारिकाओं का रात्रि का मार्ग कैसे सूचित होता है—

**गत्युत्कम्पादलकपतितैर्यत्र[1] मन्दारपुष्पैः**
**पत्रच्छेदैः[2] कनककमलैः[3] कर्णविभ्रंशिभिश्च[4]।**
**मुक्ताजालैः[5] स्तनपरिसरच्छिन्नसूत्रैश्च[6] हारै-**
**र्नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥११॥**

**अन्वयः**—यत्र कामिनीनां नैशः मार्गः सवितुः उदये गत्युत्कम्पात् अलकपतितैः मन्दारपुष्पैः कर्णविभ्रंशिभिः पत्रच्छेदैः कनककमलैः च स्तनपरिसरच्छिन्नसूत्रैः मुक्ताजालैः हारैः च सूच्यते ॥११॥

**शब्दार्थ—यत्र**=जिस (अलकापुरी) में, **कामिनीनाम्**=अभिसरण करने वाली स्त्रियों का, **नैशः**=रात्रि का, **सवितुः**=सूर्य के, **गत्युत्कम्पात्**=चलने में हिलने के कारण, **अलकपतितैः**=बालों से गिरे हुए, **मन्दारपुष्पैः**=मन्दार के पुष्पों से, **कर्णविभ्रंशिभिः**=कानों से गिरे हुए, **पत्रच्छेदैः**=पत्तों

---

१. गत्योत्कम्पाः।
२. पत्रच्छेदैः, कलृप्तच्छेद्यैः।
३. कनकनलिनैः।
४. विभ्रंसिभिश्च।
५. मुक्तालग्नैः मुक्तालग्नस्तन०।
६. स्तनपरिमलैश्छिन्नं, स्तनपरिमल०, मुक्ताजालस्तनपरिचयाच्छिन्न०, स्तनपरिसरैश्छिन्न०।

के खण्डों से, **कनककमलैः**=स्वर्णकमलों से, **स्तनपरिसरच्छिन्नसूत्रैः**=स्तन प्रदेश पर टूटे हुए धागों वाले, **मुक्ताजालैः**=मोतियों की लड़ों से, **हारैः**=पुष्पों के हारों से, **सूच्यते**=सूचित हो जाता है ।

**अनुवाद**—**जिस (अलकापुरी) में अभिसरण करने वाली स्त्रियों का रात्रि का मार्ग सूर्य के निकलने पर चलने में हिलने के कारण बालों से गिरे हुए मन्दार के पुष्पों से, कान से गिरे हुए पत्तों के खण्डों से और स्वर्ण कमलों से और स्तन प्रदेश पर टूटे हुए धागों वाले मोतियों की लड़ों से तथा पुष्पों के हारों से सूचित हो जाता है ॥११॥**

**संस्कृत-टीका**—हे मेघ ! यत्राऽलकायां अभिसारिकाणाम् रात्रिसम्बन्धीपन्थाः सूर्योदये सति गमनचलनात् चूर्णकुन्तलस्रस्तैः सुरतरुकुसुमैः कर्णपतितैः पत्रलताखण्डैः सुवर्णपद्मैः च कुचप्रदेशत्रुटिततन्तुभिः मौक्तिकसरैः पुष्पमालाभिः च सूच्यते ।

**सञ्जीवनी**—गत्युत्कम्पादिति । यत्रालकायां कामिनीनामभिसारिकाणाम् । निशि भवो नैशो मार्गः सवितुरुदये सति गत्या गमनेनोत्कम्पश्चलनं तस्माद्धेतोरलकेभ्यः पतितैर्मन्दारपुष्पैः सुरतरुकुसुमैः। तथा पत्राणां पत्रलतानां छेदैः खण्डैः । पतितैरिति शेषः । तथा कर्णेभ्यो विभ्रंश्यन्तीति कर्णविभ्रंशीनि तै कनकस्य कमलैः । (षष्ठ्या विवक्षितार्थलाभे सति मयटा विग्रहेऽव्याहारदोषः । एवमन्यत्राप्यनुसंधेयम्।) तथा मुक्ताजालैर्मौक्तिकसरैः । शिरोनिहितैरित्यर्थः । तथा स्तनयोः परिसरः प्रदेशस्तत्र छिन्नानि सूत्राणि येषां तैर्हारैश्च सूच्यते ज्ञाप्यते । मार्गपतितमन्दारकुसुमादिलिङ्गैरयमभिसारिकाणां पन्था इत्यनुमीयत इत्यर्थः ॥११॥

**टिप्पणी**—**गत्युत्कम्पात्**—कामिनियाँ अपने प्रियतमों के पास अभिसार के लिए शीघ्रतापूर्वक जाती हैं, क्योंकि एक तो रात्रि का भय दूसरे किसी को उनके जाने का पता न चल जाये । इसलिए शरीर के हिलने-डुलने से उनके केशपाश में लगे अलंकरण आदि मार्ग में गिर जाते हैं, जिससे यह सूचित हो जाता है कि अभिसारिकायें इस मार्ग से गयी हैं ।

**पत्रच्छेदैः**—पत्तों के टुकड़ों से—इससे सिद्ध होता है कि स्त्रियाँ प्राचीन काल में अपने श्रृंगार प्रसाधन में फूल-पत्तियों का उपयोग करती थीं । इसी प्रकार का वर्णन कालिदास ने अभिज्ञान शाकुन्तल में भी किया है ।

**कामिनीनाम्**—साधारणतः तरुणी और सुन्दर स्त्री को कामिनी कहते हैं । किन्तु यहाँ पर अतिशय काम से पीड़ित स्त्री अर्थ ग्राह्य है, क्योंकि **कामश्चाष्टगुणः स्मृतः** स्त्रियों का काम वेग पुरुषों की अपेक्षा आठ गुना होता है, चाणक्य की इस उक्ति के अनुसार स्त्रियों को कामिनी कहते हैं । इसलिए इसका अर्थ यहाँ अभिसारिकायें हैं । अभिसारिका दो प्रकार की होती हैं, अपने पास प्रियतम को बुलाने वाली और दूसरी स्वयं प्रियतम के पास जाने वाली, यहाँ पर दूसरी प्रकार की अभिसारिका दृष्टिगोचर होती है । साहित्यदर्पण में अभिसारिका का लक्षण इस प्रकार दिया गया है—

*अभिसारयते कान्तं या मन्मथवशंवदा ।*
*स्वयं वाऽभिसरत्येषां धीरैरुक्ताऽभिसारिका ॥ (सा० द० ३/७६)*

**व्याकरण**—**गत्युत्कम्पात्**—गत्या उत्कम्पः (चलनम्) तस्मात् (तृ० त०) हेतौ पञ्चमी, **उत्कम्पः**—उद्+ √कम्प्+घञ् (भावे) । **अलकपतितैः**—अलकेभ्यः पतितानि तैः (प० त०) मन्दारपुष्पैः का विशेषण है । **मन्दारपुष्पैः**—मन्दाराणां पुष्पैः (ष० त०)। **पत्रच्छेदैः**—पत्राणां छेदाः तैः (ष० त०), **छेदाः**—√छिद्+घञ् । **कनककमलैः**—कनकस्य कमलानि तैः (ष० त०) । **कर्णविभ्रंशिभिः**—कर्णेभ्यो विभ्रश्यन्तीति (उप० त०) तैः, कर्ण+वि+√भ्रंश+णिनि—**कर्णविभ्रंशिन्,**

